## ॥ श्रीसुदर्शनाष्टोत्तरशतनामस्तोत्रम् ॥

॥श्रीः॥

सुदर्शनश्चक्रराजः तेजोव्यूहो महाद्युतिः ।
सहस्रबाहु-र्दीप्ताङ्गः अरुणाक्षः प्रतापवान् ॥ १॥

अनेकादित्यसङ्काशः प्रोद्यज्ज्वालाभिरञ्जितः ।
सौदामिनी-सहस्राभः मणिकुण्डल-शोभितः ॥ २॥

पञ्चभूतमनोरूपो षट्कोणान्तर-संस्थितः ।
हरान्तः करणोद्भूत-रोषभीषण-विग्रहः ॥ ३॥

हरिपाणिलसत्पद्मविहारारमनोहरः ।
श्राकाररूपस्सर्वज्ञः सर्वलोकार्चितप्रभुः ॥ ४॥

चतुर्दशसहस्रारः चतुर्वेदमयो-ऽनलः ।
भक्तचान्द्रमसज्योतिः भवरोग-विनाशकः ॥ ५॥

रेफात्मको मकारश्च रक्षोसृग्रूषिताङ्गकः ।
सर्वदैत्यग्रीवनाल-विभेदन-महागजः ॥ ६॥

भीमदंष्ट्रोज्ज्वलाकारो भीमकर्मा विलोचनः ।
नीलवर्त्मा नित्यसुखो निर्मलश्री-र्निरञ्जनः ॥ ७॥

रक्तमाल्यांबरधरो रक्तचन्दनरूषितः ।
रजोगुणाकृतिश्शूरो रक्षःकुल-यमोपमः ॥ ८॥

नित्यक्षेमकरः प्राज्ञः पाषण्डजनखण्डनः ।
नारायणाज्ञानुवर्ती नैगमान्तःप्रकाशकः ॥ ९॥

बलिनन्दनदोर्दण्ड-खण्डनो विजयाकृतिः ।
मित्रभावी सर्वमयो तमोविध्वंसकस्तथा ॥ १०॥

रजस्सत्त्वतमोद्वर्ती त्रिगुणात्मा त्रिलोकधृत् ।
हरिमायागुणोपेतो-ऽव्ययो-ऽक्षस्वरूपभाक् ॥ ११॥

परमात्मा परंज्योतिः पञ्चकृत्य-परायणः ।

ज्ञानशक्ति-बलैश्वर्य-वीर्य-तेजः-प्रभामयः ॥ १२॥

सदसत्परमः पूर्णो वाङ्मयो वरदोऽच्युतः ।
जीवो गुरुर्हंसरूपः पञ्चाशत्पीठरूपकः ॥ १३॥

मातृकामण्डलाध्यक्षो मधुध्वंसी मनोमयः ।
बुद्धिरूपश्चित्तसाक्षी सारो हंसाक्षरद्वयः ॥ १४॥

मन्त्र-यन्त्र-प्रभावज्ञो मन्त्र-यन्त्र-मयो विभुः ।
स्रष्टा क्रियास्पद-श्शुद्धः आधारश्चक्र-रूपकः ॥ १५॥

निरायुधो ह्यसंरम्भः सर्वायुध-समन्वितः ।
ओम्काररूपी पूर्णात्मा आंकारस्साध्य-बन्धनः ॥ १६॥

ऐंकारो वाक्प्रदो वग्मी श्रींकारैश्वर्यवर्धनः ।
क्लींकारमोहनाकारो हुंफट्क्षोभणाकृतिः ॥ १७॥

इन्द्रार्चित-मनोवेगो धरणीभार-नाशकः ।
वीराराध्यो विश्वरूपः वैष्णवो विष्णुरूपकः ॥ १८॥

सत्यव्रतः सत्यधरः सत्यधर्मानुषङ्गकः'
नारायणकृपाव्यूह-तेजश्चक्र-स्सुदर्शनः ॥ १९॥

॥ श्री सुदर्शनाष्टोत्तरशतनाम स्तोत्रं संपूर्णम्॥